गङ्गास्तवः

श्रीगणेशाय नमः ॥

सूत उवाच --
शृणुध्वं मुनयः सर्वे गङ्गास्तवमनुत्तमम् ।
शोकमोहहरं पुंसामृषिभिः परिकीर्तितम् ॥ १॥

ऋषय ऊचुः --
इयं सुरतरङ्गिणी भवनवारिधेस्तारिणी
स्तुता हरिपदाम्बुजादुपगता जगत्संसदः ।
सुमेरुशिखरामरप्रियजलामलक्षालिनी
प्रसन्नवदना शुभा भवभयस्य विद्राविणी ॥ २॥

भगीरथरथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका सिता ।
सुरासुरनरोरगैरजभवाच्युतैः संस्तुता
विमुक्तिफलशालिनी कलुषनाशिनी राजते ॥ ३॥

पितामहकमण्डलुप्रभवमुक्तिबीजा लता
श्रुतिस्मृतिगणस्तुतद्विजकुलालवालावृता ।
सुमेरुशिखराभिदा निपतिता त्रिलोकावृता
सुधर्मफलशालिनी सुखपलाशिनी राजते ॥ ४॥

चरद्विहगमालिनी सगरवंशमुक्तिप्रदा
मुनीन्द्रवरनन्दिनी दिवि मता च मन्दाकिनी ।
सदा दुरितनाशिनी विमलवारिसन्दर्शन-
प्रणामगुणकीर्तनादिषु जगत्सु संराजते ॥ ५॥

महाभिषसुताङ्गना हिमगिरीशकूटस्तना
सफेनजलहासिनी सितमरालसच्चारिणी ।

चलल्लहरिसत्करा वरसरोजमालाधरा
रसोल्लसितगामिनी जलधिकामिनी राजते ॥ ६॥

क्वचिन्मुनिगणैः स्तुता क्वचिदनन्तसम्पूजिता
क्वचित्कलकलस्वना क्वचिदधीरयादोगणा ।
क्वचिद्रविकरोज्ज्वला क्वचिदुदग्रपाताकुला

क्वचिज्जनविगाहिता जयति भीष्ममाता सती ॥ ७॥

स एव कुशली जनः  प्रणमतीह भागीरथीं
स एव तपसां निधिर्जपति जाह्नवीमादरात् ।
स एव पुरुषोत्तमः स्मरति साधु मन्दाकिनीं
स एव विजयी प्रभुः सुरतरङ्गिणीं सेवते ॥ ८॥

तवामलजलाचितं खगसृगालमीनक्षतं
चलल्लहरिलोलितं रुचिरतीरजम्बालितम् ।
कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽप्यहं
त्रिपथगामिनि प्रियमतीव पश्याम्यहो ॥ ९॥

त्वत्तीरे वसतिं तवामलजलस्नानं तव प्रेक्षणं
त्वन्नामस्मरणं तवोदयकथासंलापनं पावनम् ।
गङ्गे मे तव सेवनैकनिपुणोऽप्यानन्दितश्चादृतः
स्तुत्वा चोद्गतपातको भुवि कदा शान्तश्चरिष्याम्यहम् ॥ १०॥

इत्येतदृषिभिः प्रोक्तं गङ्गास्तवनमुत्तमम् ।
स्वर्ग्यं यशस्यमायुष्यं पठनाच्छ्रवणादपि ॥ ११॥

सर्वपापहरं पुंसां बलमायुर्विवर्धनम् ।
प्रातर्मध्याह्नसायाह्ने गङ्गासान्निध्यता भवेत् ॥ १२॥

इत्येतद्भार्गवाख्यानं शुकदेवान्मया श्रुतम् ।
पठितं श्रावितं चात्र पुण्यं धन्यं यशस्करम् ॥ १३॥

अवतारं महाविष्णोः कल्केः परममद्भुतम् ।
पठतां शृण्वतां भक्त्या सर्वाशुभविनाशनम् ॥ १४॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे
ऋषिकृतो गङ्गास्तवः सम्पूर्णः ॥